इति संकल्प्य पितरं सैवं कृतमृषाब्रवीत् । गतस्तात परित्यज्य भर्ता मां सहसैव सः ॥ १७०
तद्वियुक्ता कथं चाहं तिष्ठामीह यथासुखम् । तद्यामि तीर्थयात्रायै क्लिश्नाम्येतां हतां तनुम् ॥ १७१
इत्युक्त्वा तमनिच्छन्तमप्यनुज्ञाप्य यत्नतः । पितरं सा ततः प्रायात्सधना सपरिच्छदा ॥ १७२
क्रमेण गत्वा कृत्वा सा महार्घं गणिकोचितम् । वेषं विवेशोज्जयिनीं पुरीं लोकैकसुन्दरी ॥ १७३
कृत्वा च परिवारेण सह कर्तव्यसंविदम् । सुमङ्गलेति साकार्षीन्नाम [illegible]त्मनः ॥ १७४
कामरूपान्महात्यागभोग्या नाम्ना सुमङ्गला । आगता गणिकेत्येति भृत्यैर[illegible]प्यत तत्र सा ॥ १७५
देवदत्ताभिधानाथ तत्रत्या गणिकोत्तमा । ददावभ्येत्य तस्यै स्वं राजार्हं मन्दिरं पृथक् ॥ १७६
तत्र स्थितां भृत्यमुखेना[illegible] शशी । [illegible] गृह्यतामिति ॥ १७७
[illegible]ऽनुतिष्ठेत: [illegible] कामुकः । [illegible] कार्यमस्माकं नान्यैः पशुनिभैर्नृभिः ॥ १७८
इत्युक्त[illegible] स सुमङ्गलया तया । तथेत्युक्त्वा शशी [illegible] तन्मन्दिरं ययौ ॥ १७९
तत्र स प्रथमं द्वारं संप्राप्यावेदितात्मकः । द्वारपालेन जगदे कुर्वस्मत्स्वामिनीवचः ॥ १८०
स्नातोऽपीह पुनः स्नाहि प्रवेशो नास्ति तेऽन्यथा । तच्छ्रुत्वा स शशी स्नानं तथेत्यङ्गीचकार तत् ॥ १८१
ततः स [illegible]भिरभ्यक्तो[illegible] । [illegible] प्रथमः प्रहरो गतः ॥ १८२
[illegible] प्राप्तोऽथ स द्वारं द्वितीयं द्वाररक्षिणा । ऊचे स्नातोऽसि तच्चाद्य प्रसाधनविधिं कुरु ॥ १८३
तथेत्युक्तवतस्तस्य [illegible]प्रसाधनम् । [illegible]द्वितीयोऽपि प्रहरः पर्यहीयत ॥ १८४
तृतीयमथ संप्राप्त[illegible]द्वारं स रक्षिभिः । जगदे भुङ्क्ष्व तावत्त्वं प्रविशाभ्यन्तरं ततः ॥ १८५
बाढमित्युक्तवन्तं च [illegible] । आहारैर्विविधैर्यावत्तृतीयः प्रहरो गतः ॥ १८६
अथ वासगृहद्वारं चतुर्थं स कथंचन । संप्राप्तो द्वारपालेन तत्रैवं निरभर्त्स्यत ॥ १८७
[illegible]कामुक निर्याहि मा खलीकारमाप्स्यसि । कालः किं [illegible] ग्राम्ये गणिकानवसंगमे ॥ १८८
एवं तिरस्कृतस्तेन स कालेनेव रूपिणा । शशी विगलितच्छायो यथागतमगात्ततः ॥ १८९
इत्थं सुमङ्गलाख्यायां [illegible] वञ्चितास्तया । गणिकारूपया विप्रसुतयान्येऽपि कामुकाः ॥ १९०
[illegible] कौतुकादेव कृत्वा [illegible] । अहं [illegible] अगच्छं सुप्रसाधितः ॥ १९१
[illegible]दानतः । तस्या वासगृहद्वारं प्राप्तोऽहमविलम्बितः ॥ १९२
[illegible] प्रविश्य ताम् । वेश्यावेशपरिज्ञातामपश्यं स्वप्रियामहम् ॥ १९३
सा पुनः [illegible] । [illegible] पर्यङ्कनिषण्णं मामुपाचरत् ॥ १९४
ततो लोकैकसुन्दर्या साकं नीतनिशस्तया । बद्धानुरागो निर्गन्तुं नाशकं तद्गृहादहम् ॥ १९५
सापि [illegible]तः पार्श्वान्नापयाति स्म मे तदा । यावद्दिनैः सगर्भाभून्मेचकाग्रपयोधरा ॥ १९६
कृत्वाथ कूटलेखं सा विदग्धा मह्यमर्पयत् । राज्ञा मे प्रभुणा लेखः प्रहितो वाच्यतामिति ॥ १९७
ततश्चाहं तमुन्मुच्य लेखमेवमवाचयम् । श्रीकामरूपतः श्रीमान्मानसिंहो महीपतिः ॥ १९८
सुमङ्गलामादिशति स्थितास्यत्र चिरं कथम् । शीघ्रमागम्यतां हित्वा देशान्तरकुतूहलम् ॥ १९९
मयैवं वाचिते लेखे साब्रवीद्दुःखितेव माम् । याम्यहं मयि मा मन्युं कृथाः परवती ह्यहम् ॥ २००
एवं कृत्वा मिषं प्रायात्स्वं सा पाटलिपुत्रकम् । अहं तु तां परायत्तेत्यनुरक्तोऽपि नान्वगाम् ॥ २०१
सा च पाटलिपुत्रस्था कालेन सुषुवे सुतम् । स वर्धमानश्च कलाः सर्वाः शिशुरशिक्षत ॥ २०२
द्वादशाब्दश्च वयसा स बालो बालचापलात् । दासेरकं सवयसं लत्तया जात्वताडयत् ॥ २०३
ताडितस्तं च सोऽवादीद्रुदन्दासेरकः क्रुधा । त्वं ताडयसि मां यस्य तव न ज्ञायते पिता ॥ २०४
मातुर्विदेशभ्रान्ताया जातस्त्वं हि यतस्ततः । इत्युक्तस्तेन वैलक्ष्याद्गत्वाप्राक्षीत्स मातरम् ॥ २०५
अम्ब को मे पिता कुत्र स चाले कथ्यतामिति । साथ माता द्विजसुता वीक्ष्य क्षणमुवाच तम् ॥ २०६
पिता ते मूलदेवाख्यो मां त्यक्त्वोज्जयिनीं गतः । इत्युक्त्वा मूलतस्तस्मै स्ववृत्तान्तं शशंस सा ॥ २०७
ततः स बालोऽवादीत्तामम्ब तत्रानयाम्यहम् । गत्वा तं पितरं बद्ध्वा प्रतिज्ञां पूरयामि ते ॥ २०८

# ग्रन्थकर्तुः प्रशस्तिः ।

श्रीसातवाहनकुलाम्बुधिपारिजातः सङ्ग्रामराज इति भूमिपतिर्बभूव । १
येनावतीर्य विविधैर्विबुधैः श्रितेन कश्मीरमण्डलमनीयत नन्दनत्वम् ॥
तस्यात्मजो नमदशेषमहीशमौलिमाणिक्यकायनिकषीकृतपादपीठः । २
श्रीमाननन्त इति तत्कुलकल्पवृक्षः शौर्यैकराशिरुदपद्यत चक्रवर्ती ॥
द्वाराग्रसीमनि च यस्य निकृत्तकण्ठः क्षिप्तोदरं नरपतेर्लुठति स्म मूर्धा । ३
सेवागतो जितमहाहरिचक्रचारुकीर्तिश्रवेण परितोषमिवैत्य राहुः ॥
सोऽथ त्रिगर्ताधिपतेस्तनूजां राजेन्दुरिन्दोर्वहति स्म देवीम् । ४
तमोपहां सूर्यवतीं प्रजानां विभातसंध्यामिव विश्ववन्द्याम् ॥
आम्नायैरिव नानादेशसमुद्भूतविप्रशतसेव्यैः । ५
अब्धिभिरिव रत्नभृतैर्भीतिभृतां भूभृतामपि शरण्यैः ॥
कल्पद्रुमैरिवान्वहमाशोपगतार्तिहारिभिरुदारैः । ६
देव्या यया विरचितैः कश्मीरा मण्डिता मठप्रवरैः ॥
यन्निर्मितान्यमलतोयवहद्वितस्ताविस्तीर्णतीरभुवि सौधसुधासितानि । ७
व्योमापगापरिगतान्तहिमाद्रिशृङ्गभङ्गिं भजन्ति सुतरां सुरमन्दिराणि ॥
दत्तैरसंख्यमणिहेममहाग्रहारकृष्णाजिनद्रविणपर्वतगोसहस्रैः । ८
विश्वंभरा··········न च नापि भू······विश्वं सदा भगवती श्रिः या बिभर्ति ॥
क्ष्मामण्डलैकतिलकोऽप्यनलीकलग्नो यस्या घनामृतमयो गुणि[illegible]ऽपि । ९
विद्वेषिपर्वदशिवोऽपि शिवावतारः श्रीमान्सुतः कलशदेव इति क्षितीशः ॥
उर्वीभृतो नमयितुं निखिलानुदग्रान्पातुं क्षमश्च जलधीनपि सम[illegible]रः । १०
सृष्टः सुरैरभिनवः कलशोद्भवो यः श्रीहर्षदेव इति नृपवरः स यस्याः ॥
तस्याः सदैव गिरिशार्चनहोमकर्मनानाप्रदानविधिबद्धसमुद्यमायाः । ११
शास्त्रेषु नित्यविहितश्रवणश्रमाया देव्याः क्षणं किमपि चित्तविनोदहेतोः ॥
नानाकथामृतमयस्य बृहत्कथायाः सारस्य सज्जनमनोम्बुधिपूर्णचन्द्रः । १२
सोमेन विप्रवरभूरिगुणाभिरामरामात्मजेन विहितः खलु संग्रहोऽयम् ॥
प्रविततरङ्गभङ्गिः कथासरित्सागरो विरचितोऽयम् । १३
सोमेनामलमतिना हृदयानन्दाय भवतु सताम् ॥

